एस्.जगन्नाथः। मैसूरु
jagannathas1956@gmail.com




२
१८.२.२०२०

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

केवलं द्वे दिने प्रदर्शितदशदिशाख्यपत्रिकाव्यसायस्य मम। मम चापल्यस्य त्यक्तुमशक्यत्वाद् द्वितीयां संचिकामधुनैव निःसारयामि।

यद्यपि प्रथमस्यां संचिकायां संस्कृतपण्डित इत्यस्मिन् विषये मदीयं वक्तव्यमभिदधामीति प्रत्यजानाम्। परन्त्वधुना तस्मादपि वस्तुनो महत्तरं वस्त्वधिकृत्य कटाक्षं निक्षिपामि।

संस्कृतग्रन्थेषु पीठिका किमर्थं संस्कृतेतराभिर्भाषाभिर्विरच्यते ? संस्कृतलेखनाज्ञानं प्रधानं कारणमत्रेति केषाञ्चन मनसि प्रतिभायात्। केषुचन प्रसंगेष्वेतत् सत्यमपि। परन्तु इङ्ग्लीष्भाषया पीठिकाया रचनाप्रसंगेषु सर्वत्रापि नैतदेवं भवितुमर्हति। विद्वद्वरीयानपि सन् वि.राघवन् स्वयं संस्कृतेन मुत्तुस्वामिदीक्षितचरितं रचितवान् तस्य पीठिकां तु इङ्ग्लीष् भाषयैव दत्तवान्। इत्थंभूताः प्रसंगा अधिकतरमुपलभ्यन्ते।

ब्रिटिष्जनानां निन्दनं बहु सुकरं कर्तुम्। परन्तु तैः किं 'संस्कृतग्रन्थानां पीठिका इङ्ग्लीष्भाषया विरचनीया' इत्याज्ञां कदाऽप्यकुर्वन् ?

अपि च संस्कृतेतराभिरेव भाषाभिः संस्कृतोत्सवेषु ये भाषन्ते ते सर्वेऽपि संस्कृतभाषया भाषणं कर्तुमसमर्था इति वक्तुं न शक्यते। संस्कृतभाषया शास्त्रार्थगोष्ठीषु स्वपक्षं मण्डयन्तोऽपि, वैदुष्यस्य परमोत्तुङ्गे स्तरे विराजमाना अपि विद्वन्मणयः किमर्थं संस्कृतसंमेलनेषु संस्कृतेतराभिर्भाषाभिः संस्कृतं प्रशंसन्तीति चित्रीयते चेतः।

अत्रेत्थं प्रतिभाति मे। प्रत्यहं या भाषा अस्माकं कर्णपटलपथेन चलति, तस्य सर्वात्मना त्यागो न संभवः। संस्कृतपरो मन्दमारुतो नाद्यापि सम्यग् वाति भारते। तत्र प्रमाणानीमानि-

१.संस्कृतग्रन्थानां पीठिकासु संस्कृतभाषया विरचितासु, तत्र सत्स्वपि सप्रयोजनेषु विषयेषु ते प्रायेण संशोधनप्रबन्धादिषु नोद्ध्रियन्ते।

२.विदेशीया एव संस्कृतविद्वज्जनाः न पुनर्भारतीया इति या धारणा भारतीयानां जनानां मनसि दृढं निबद्धा तस्या अपगमनं न सुकरम्। " विदेशीयाः प्रायेण कटाक्षमपि न निपातयन्ति संस्कृतेन विरचितासु पीठिकासु " इति वयमेव संस्कृतपीठिका अधिकृत्यावहेलनां कुर्मः।

३.संस्कृतेन विरचितास्वाधुनिकीषु संस्कृतकृतिषु दृष्टिप्रसरः संस्कृतज्ञानामतीव विरलः। कदाचित् कोऽपि पिएच्.डी. पदव्यै प्रयतमानः सज्जनो मामुपसृत्य 'आधुनिके काले मीमांसाया विषये संशोधनस्योत्कृष्टं स्तरं दर्शयन् कोऽपि ग्रन्थो लभ्यते वा' इत्यपृच्छत्। अहमवदम्- 'लभ्यते। डि.टि.ताताचार्यशिरोमणिना विरचितो मीमांसाभ्युदयनामा ग्रन्थ इत्थंभूतलक्षणः' इति। स च महानुभावः शिरोऽन्यत्र परिवर्तय्य 'ओह्, संस्कृतभाषया विरचितो वा स ग्रन्थः?' इति सावहेलनामुक्तिं मुणन् विषयान्तरम् अकरोत् संभाषणमनुवर्तयितुं त्वैच्छदेव। अहं चोदासीनः 'मम कार्यान्तरं विद्यते। लब्धे चावसरे कृपया पुनरागम्यताम्' इत्युक्त्वा संभाषणम् असमापयम्।

दृश्यतामद्वैतवेदान्तः। सच्चिदानन्देन्द्रसरस्वती ग्रन्थानां यं राशिमेवासृजत् तस्य प्रचारः संस्कृतशास्त्रज्ञानां-विशिष्य, स्यान्स्क्रीट् स्कालर्त्वेनात्मानं मन्यमानानां समवाये-विरल एव। वर्ल्ड् स्याँन्स्क्रीट् कान्फेरेन्स् इत्याख्येषु यदा कदा प्रचलत्सु स्याँन्स्क्रीट्नाटकेषु सच्चिदानन्देन्द्रसरस्वत्या नाम्न उच्चारणमपि न श्रूयते येषु केषाञ्चन द्वित्राणां नवीनानां कवीनां द्वित्राः साहित्यकृतयः कथञ्चित् कैश्चिच्छ्वासोच्छ्वासं कार्यन्ते।

कन्नडसाहित्यसम्मेलनेषु गोविन्दपै-कुवेम्पु-बेन्द्रे-इत्यादीन्यभिधानानि यथाऽस्माकं मानससरोवरे तद्विरचितग्रन्थनामतरङ्गान् उत्थापयन्ति, तद्वत् आधुनिकाः संस्कृतग्रन्थरचयितारोऽस्माकं मनसि संस्कृतसम्मेलनेषु स्पन्दनं प्रायेण न कुर्वन्ति। अथवा तांस्तथा विधातुं वयं नानुमतिं दद्मः !

संस्कृतं श्रेष्ठं, देवभाषा, परमोत्कृष्टशब्दसंपद्वती चेति पुनः पुनर्घोषणाभिः संस्कृतस्यावहेलनमिवास्माभिर्विरच्यते- न पुनराधुनिकसंस्कृतवाङ्मयमधिकृत्य संस्कृतेनैव विचारः।

इतरभाषाणां क्षेत्रे सुस्पष्टं केचन भेदाः- १.विद्वज्जना ये तत्तद्भाषाभिस्तत्तद्भाषाणां चरित्रमधिकृत्य विरचितग्रन्थाः २. ग्रन्थानां रचयितारो ये तत्तद्भाषाभिर्विरचित-नानाविषयकग्रन्थाः ३. कवयो ये तत्तद्भाषाभिर्विरचितकथामहाकथापद्यकाव्यादयः कवयः ४. तत्तद्भाषाभिर्विरचितग्रन्थानां पाठका ये ग्रन्थान् क्रीत्वा पठन्ति, येन तत्तद्भाषाग्रन्थकर्तारो जीवन्ति।

दृश्यतामधुना सांस्कृतं जगत्। पठनं पाठनम् इति द्वौ मन्त्रौ प्रधानौ तत्र यत्र नूतनसाहित्यमतितमामवगणितम्। नवीनं साहित्यं न सृज्यत इति नैव ममाभिप्रायः। परन्तु संस्कृते सृज्यमानेन नवीनेन साहित्येन कति कृतिन आजीविकां संपादयन्तीति मम प्रश्नः।

अधुना-

**ब्रह्मकाव्य**स्य मदीयस्य प्रथमः सर्गः पठ्यताम्-

# ब्रह्मकाव्यम्।

## एस्.जगन्नाथेन विरचितम्।

### प्रथमः सर्गः

१.यदवस्तुदिशाकालं ज्ञानमस्तित्वनामकम्।
द्वैताद्वैतवचोऽतीतं तन्मे स्फूर्यान्निरन्तरम्॥
२.यस्माद् विततमेकस्माद् अनेकत्वमनेकशः ।
आप्यासुस्तत्र विश्रान्तिमश्रान्तं मम वृत्तयः॥
३.अविद्यया कृता माया विद्यया लयमृच्छतात्।
अहंप्रतीतिविकलं जागर्याद् ब्रह्म शाश्वतम्॥
४.ईशोपनिषदादीनां वेदान्तानां विचारणा।
सन्तन्यमाना सततं बोधविघ्नान् व्यपोहतु॥
५.ध्मातवेदान्तशङ्खेन ध्वानिताध्यात्मविष्टपाः।
ब्रह्मानुभवरूपं शं स्मारयेयुः शिवोक्तयः॥
६.लोकम्पृणेषु शास्त्रेषु रिक्तरागस्य देहिनः।
परमानन्दनाट्टालनिश्श्रेणी गुरुजा गिरा॥
७.कं वर्णयानि काव्येन नूतनेन ध्वनिश्रिया।
इति चिन्तनमृत्स्यायां शङ्करोऽङ्कुरितो द्रुतम्॥
८.नेता विश्वार्थविश्लेषवेदान्तविवृतौ कृती।
समस्थिरायां ननु मे हन्त! नृत्यति भारती॥
९.यद्यप्याचार्यचारित्रे प्रतिभापुरुभिः पुरा।
हृदयानि स्वकीयानि प्रापितानि प्रकाशनम्॥
१०.तथाऽपि लोके प्रथिता कथा बहुलमादृताः।
आचार्योपज्ञगीर्दण्डो नावष्टम्भीव्यधायि तैः॥
११.प्रस्थानत्रयभाष्येषु पीयूषार्णवबन्धुषु।
तरन् भङ्गेषु भूयासं तिमिङ्गिलसहोदरः॥
१२.यदभाषिष्ट भाष्याणि भगवान् भव्यचेतनः।
तदेवाद्भुतमुद्भूतमन्यत् कल्पितजल्पितम्॥
१३.यद्वेदान्तस्य नव्यस्य युक्तिप्रत्युक्तिरीतयः।
स्फोरिताः शङ्करस्यास्यात् तदम्बोधिर्निपानितः॥
१४.ममाचार्यसरित्तारे नौका तस्यैव वाङ्मयम्।
कर्णधारः सुधीः सच्चिदानन्देन्द्रसरस्वती॥
१५.मूलत्रयं मे काव्यद्रोः शुद्धा सिद्धान्तधोरणी ।
परिभाषा गुरूपज्ञं ताच्चरित्रं च शोधनम्॥
१६.काव्यक्रियाभिधं व्याजं समुपाश्रित्य शाङ्करे।
तितीर्षामि ससन्तोषं सिद्धान्तामृतसागरे॥
१७.सिञ्चन्त्वमृतबिन्दून् मे हृदये शाङ्करोक्तयः।
अज्ञानस्य विनाशाय वेदान्ता अपि जाग्रतु।
१८.उपकण्ठं मुनेर्यातुमुत्सहे कविताध्वना।
मतमाचार्यविन्यस्तं येन मे हृदमञ्चति॥
१९.नूनं धन्योऽस्मि मान्यस्य सुकाव्यस्य सिसृक्षया।
काले विचारविस्तारनिबिडे मौढ्यवर्जिते॥
२०.येन भारतवर्षेण प्रकाशस्येव वर्ष्मणा।
द्योतिता पृथिवी सर्वा नेताऽजायत तत्र नः॥
२१.तथाहि-दक्षिणे तीरे केरलं नाम नूपुरम्।
पदे भारतभारत्याः शास्त्रनृत्यैः स्वनत्यलम्॥
२२.तत्रासन् सप्तमे क्रैस्ते शतके पापभीतयः।
विद्वांसो यज्ञविज्ञाने मीमांसाप्रीतिरीतयः॥
२३.ज्यां तां कर्मठशर्माढ्यां भगवान् जैमिनिर्मुदा।
याजको राजमानश्रीरध्यतिष्ठदिव स्वयम्॥
२४.यज्ञधूमैरिवोद्धूतैः प्रसृतैः सर्वतोदिशम्।
प्रस्थिता जैत्रयात्रायै दृश्या द्वादशलक्षणी॥
२५.निबिडैः क्रातवैर्धूमैर्नाकलोका गुरुक्लमाः।
निरर्गलगलद्बाष्पा निनिन्दुः स्वानिमेषताम्॥
२६.क्व भूः क्व स्वरिति ज्ञातुम् अशक्तानां हविर्भुजाम्।
धूमब्रह्मेक्षमाणानां जाठराग्निरुपोषितः॥
२७.संहितानां कलो घोषो ब्राह्मणारण्यकव्रजैः।
सुधाया इव संजातः सेकः श्रुतिषु कर्मिणाम्॥
२८.भूर्यज्ञधूमतन्त्रीभिः संपर्कं प्राप्य मन्त्रवाक्।
सुरान् असृष्टहव्यस्य स्वर्गस्याह किमर्थताम्॥
२९.नक्तमप्यग्निजैर्द्योतैर्दिनभ्रान्तिं वितन्वताम्।
विप्राणां कृष्णपक्षस्य विश्लेषोऽवर्ततानिशम्॥
३०.भुक्तस्य स्फारहव्यस्य जीर्णतायाः कृते ध्रुवम्।
व्यायामो वीतिहोत्रस्य द्युसद्भ्यो हविरर्पणम्॥
३१.ऋत्विजां यज्ञमग्नानाम् ऋजुवक्रकरः शिखी।
अस्वर्णमयभूषाणां प्राप भूषणकारिताम्॥
३२.अध्वनीनैर्मुमुक्षाया विबुधैरध्वराध्वनि।
गृहीतपुण्यपाथेयैर्गृहित्वं जगृहे गृहे॥

३३.यथा नदीनदाः सर्वे यान्ति लोके सरित्पतिम्।
तथा तेषां नयाः सर्वे तन्वते कर्मनिर्णयम्॥
३४.मीमांसामांसला प्रज्ञा मानितोऽग्निः प्रियः सखा।
धूमधूम्रं शरीरं श्रीर्धन्या तेषु त्रिरूपिणी॥
३५.भ्राम्यन्तः क्षत्रियाः स्तोमधूम्यास्वाहूतदिग्गजान्।
असूयाञ्च हृणीयां च स्वकीये हृदये दधुः॥
३६.नाकस्पृङ्निगणेष्वेव गुणत्सु भवगर्ततः।
अवष्टम्भकृते विप्रा विश्वासं किल चक्रिरे॥
३७.सुकल्पसूत्रश्वासानां कर्माहारेण जीवताम्।
आरण्यकब्राह्मणाभ्यां विप्राणां पुप्फुसायितम्॥
३८.पाकाय मधुपर्कस्य प्राग्वंशे यतचेतसाम्।
देवताभिरिव स्नेहः सुतरामन्वभूयत॥
३९.वटुभिर्वेदघोषेषु विहितेषु पुनः पुनः।
ऐक्षतावनिमातङ्कान्नतग्रीवः सहस्रदृक्॥
४०.विमले वेदि-कासारे वीतिहोत्राब्जशोभिनि।
पुरोहितझषैः सम्यक् पुण्यापे तरणं कृतम्॥
४१.क्रतुमग्नेषु विज्ञेषु कथंकथिकताकृते।
अलब्धावसरैश्छात्रैरक्रीड्यत निरन्तरम्॥
४२.बध्नतामक्रतौ काले ब्रह्मवद्येषु कौतुकम्।
अलक्षि वेददृष्टीनामनेहा न गतागतः॥
४३.यथेन्द्रो निर्जरव्राते कृत्याकृत्यप्रमाणितः।
तथा शिवगुरुर्नाम विप्रोऽभूद् याजकव्रजे॥
४४.अनारतमनुष्ठेयेष्वत्यन्तं व्यग्रमानसः।
संप्रदायसरस्वत्या अभवत् परमाश्रयः॥
४५.कार्मिक्यां परिभाषायां स्थितयाऽऽदृतनिष्ठया।
नेहाते रसनाश्रोत्रे न भाषां तस्य लौकिकीम्॥
४६.अकौतुस्कुतसन्देहैर्यज्ञानां पथिकैः पथि।
सेवितः शुशुभे सोऽयं बोधिद्रुवदगावृतः॥
४७.तस्य जैमिनिजीवातोस्तरणेरिव दीधितिः।
आसीद् धर्मक्रियापोषिण्यार्याम्बेति कुटुम्बिनी॥
४८.केवले नोद्वहे साक्षी कृशानुरभवत् तयोः।
अभूत् तादृक् स दम्पत्योः शास्त्रार्थेऽपि परस्परम्॥
४९.विनन्त्री च विनेया च विशिष्टविशयेष्वसौ।
गुरोः पाणिगृहीताऽऽसीद् गुर्वी सन्ततचिन्तनैः॥
५०.कस्मिंश्चिद्दिवसे प्रातश्चन्द्रे शय्यामुपेयुषि।
लोकप्रकाशको भानुर्नेत्रोन्मीलनमाचरत्॥
५१.आशायां प्रसवोन्मुख्यामाखण्डलपुरीजुषि।
स्मितोत्सवः सरस्यासीत् सहस्रदलशोभिनि॥
५२.समुद्यतः सहस्रांशो रक्तिम्णा धूमयोनयः।
बृहन्नारङ्गशल्कानामुत्करा इव रेजिरे॥
५३.खगवृन्दः खगं दृष्ट्वा प्रत्युद्गम्य स्वनीडतः।
रावैः स्वागतमाशंसदातिथेयोऽतिथिं यथा॥
५४.प्रद्योतमण्डलं मञ्जु लोकायोत्थितिमीयुषे।
देवोपदत्तं सौवर्णं शरावमिव दिद्युते॥
५५.तदा शिवगुरुर्विद्वान् क्लृप्तसन्ध्याविधिः शुचिः।
शुश्राव कञ्चनोदन्तं श्रवसोरमृतोद्भवम्॥
५६.कबलीकृतशास्त्राब्धिः कर्मव्योमखगेश्वरः।
वेदान्तारण्यवेतण्डो विद्वानायाति कश्चन॥
५७.यस्य भर्तृप्रपञ्चाख्या भूषयत्यक्षरव्रजम्।
पुनात्येष स्वपादाभ्यां दैवतः केरलक्ष्माम्॥
५८.वार्तामिमां समाकर्ण्य हर्षोद्रेकेण मानसे।
प्लाव्यमानः शिवगुरुर्जोषं तस्थौ शरीरतः॥
५९.कथमप्यास्यतो द्वित्राण्यक्षराणि बहिर्नुदन्।
पृष्टवान् भर्तुरावासं प्रवृत्तिं वदतः प्रति॥
६०.चोदितास्तेऽब्रुवन्नार्य! देवदीपपथातिथिः।
भवन्- स भगवान् भर्ता भवन्तमभिवर्तते॥
६१.यथा तेऽकथयन्नेवं तथा स ददृशे बुधः।
मीमांसाद्वितयीधारामग्नसौभगचेतनः॥
६२.आगच्छन्तममुं पश्यन्नारादङ्गीकृतश्रुतः।
बभाण स्वागतं तस्मै बद्धेनाञ्जलिनैव सः॥
६३.मुहूर्तं मौनमालम्ब्य मिथः संवीक्षमाणयोः।
विदुषोरपि वाक्पत्योर्निरसारि न वाचया॥
६४.ततो निष्कास्य वदनाद् ब्राह्मीं शिवगुरुः शिवाम्।
श्रुतिपद्यापथीनस्य चक्रे श्रुतिपुटामृतम्॥
६५.सुकृतस्य विपाकोऽयं कृतस्य महतो मया।
कर्णाश्रद्धेयवृत्तान्तो नेत्रश्रद्धेयतां गतः॥
६६.पुनानस्य पदस्थित्या भवतः सकृपं पदम्।
अयं शिवगुरुर्नाम ब्रवीति स्वागतं वचः॥
६७.सङ्कथानां प्रसङ्गेषु पुरा तत्रभवानिति।
योऽकथि स्म स एवाद्याभिधेयोऽत्रभवानिति॥
६८.आर्य! स्वस्ति भवानेतु मम सद्मानुगृह्यताम्।
अदो न वस्तुतो वाच्यं सन्तोऽव्याजकृपालवः॥
६९.श्रुत्वा भर्तृप्रपञ्चोऽपि वाणीं कर्णरसायनीम्।
प्राहिणोदास्यतो वाचं द्विजपङ्क्तिश्रिया द्विजः॥

७०.महान्तो न महाकार्येष्वेव माहात्म्यमीशते।
क्षुद्रकार्येष्वपीत्यस्य दृष्टान्तो दृष्टिमागतः॥
७१.धनं धानञ्जयं धृत्वा याजमान्यमुपेयुषा।
अहं वाचालितोऽस्म्यस्मात् परं श्रेयः किमस्ति मे?॥
७२.यद्यपि व्यवहर्तारो लौकिकोक्तिप्रयोजकाः।
भाषितेन भवान् भव्यो हितेन च मितेन च॥
७३.तौ सारस्वतसारज्ञौ श्रावयन्तः परस्परम्।
सरस्वतीं सविनयां गतौ शिवगुरोर्गृहम्॥
७४.अतिथौ स्वीकृतातिथ्ये हर्षभूम्ना हृदिस्पृशा।
व्याहारेण ततोऽवादीदातिथेयः स कर्मठः॥
७५.का मय्यनुजिघृक्षा ते ऽसृजन्मद्वेश्वभूषिताम्।
धार्ष्ट्यं पिपृच्छिषाया मे मृष्यतां यदि शक्यते॥
७६.इत्थंकारं वाक्प्रकारे निःसृते कर्मधर्मणा।
वेदान्तविदुषः प्राप भाषितं सावकाशताम्॥
७७.श्रुत्यन्तग्रन्थिनिर्भेदेष्वक्षमेण सता मया।
अलङ्कर्मीणमार्यस्य वर्णानां नाम शुश्रुवे॥
७८.स भवान् मम संशीतेः समुच्छेतृत्वमञ्चतु।
विना दिनमणेरन्यः कोऽलं रात्रिविदारणे ?॥
७९.जानामि सप्ततन्तोर्यत् सन्ततं सम्मुखीनता।
तद् विरामनुदित्येवं क्लेशकृत्त्वं क्षमस्व मे॥
८०.आकर्ण्य भर्तृविश्वस्य विस्मयप्रसवं वचः।
दधौ शिवगुरोश्चक्षुरुत्फुल्लाम्भोरुहत्विषम्॥
८१.स जगाद ''क्व विद्वांसो वेदान्ताब्धिघटोद्भवाः।
क्व वयं मुखसंस्पृष्टकतिचित्कर्मबिन्दवः॥?
८२.व्यक्तीकरोतु वक्तव्यं विद्वद्गोष्ठ्यां भवानलम्।
स्पष्टीभवतु शिष्टाब्जवनेऽध्यापकभास्करः॥
८३.पारिजातान्नापयाति पद्मस्य जलसंशयः।
भवद्ज्ञानविकल्पोऽस्मन् न विनश्यति वस्तुतः॥
८४.दास्यमाने प्रवचने मेधा स्वीयैव जायताम्।
संशीतिपेटिकोद्घाटकुञ्चिकाकृत्यकोविद॥''
८५.एवमुक्त्वा शिवाचार्यो गोष्ठीं प्रावर्तयत् तदा।
विश्रुतज्ञगिरावेणीसिष्णसुबुधमण्डिताम्॥
८६.तत्र ये मिलिताः प्राज्ञास्ते सर्वेऽध्वरगह्वरे।
कण्ठीरवत्वकुशला अन्यवादमृगाद्मराः॥
८७.विहगास्तरुशाखासु हंसा जलधिवीचिषु।
भासन्ते रमणीयाङ्गा विद्वांसः समितिष्वपि॥
८८.एवं विदन् परिषदं बुधसङ्घभव्यां
दृष्ट्वा सुधीः शिवगुरुर्मुमुदे तदानीम्।
नक्षत्रवृन्दरुचिरां दिवमीक्षमाणो
देवाधिराज इव सौख्यमतीव गच्छन्॥
८९.निखिलमपि सदस्या इन्द्रियग्राममग्रे
श्रुतिमयमिव कृत्वा पण्डितस्योपविष्टाः।
अतिशयतरमेतेऽस्मारयन् नीडलीनान्
विहगरुचिरपोतान् भक्षणोत्कण्ठचञ्चून्॥
९०.आदौ वेदध्वनिरुदचरत् स्वर्गृहश्रोत्रपेयो
गोष्ठ्यामस्तौदथ शिवगुरुर्भर्तृपूर्वं प्रपञ्चम्।
पूर्वं नत्वा बुधपरिषदि प्राप्य तस्मादनुज्ञां
हृद्-भूम्युत्सैर्वचनकरणैरुत्तरस्तां सिषेच॥
९१.विद्वान् मानसमोहनं व्यतनुत क्रत्वादरस्वान्तवत्-
सङ्ख्यावत्सदसि स्वयुक्तिनिबिडैः सद्भूषणैर्भाषणैः।
गाढाधीतिलतासुमैरुपनिषद्ज्ञानाब्धिमुक्ताफलै-
रन्यप्राज्ञविसृष्टवादविशिखब्रह्मास्त्रवीर्यैर्यथा॥

**इति ब्रह्मकाव्ये प्रथमः सर्गः**

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**अहमस्म्येवम्।**

अहमस्म्येवं विश्वस्मिन्
सुखमिव पश्यति धीर्यस्मिन्।
क्वचिदपि मोदः क्वचिदपि नादः
क्वचिदपि हृदये कवितास्वादः।
क्वचिदपि ऋजुरोहितमतिरुचिरं
क्वचिदपि पश्याम्यम्बुदविसरम्।
क्वचिदपि पाकास्वादे भेदः
क्वापि निसर्गे न भवति खेदः।
संतोषाभिनयं विदधामि
क्षेमं सर्वत्रैव वदामि।
स्मयते सुतरामोष्ठद्वन्द्वं
गूहति हृदि यद् घोरं द्वन्द्वम्।
दोषो नास्ति ममास्मिन् नटने
द्रुहिणोऽस्मिन्नपराधी घटने।

**एस्.जगन्नाथः**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~